स्कन्द० अगच्छतम् चक्षुःप्रदानार्थं गतवन्तौ युवाम् कृपमाणम् स्तुवन्तम् ऋज्राश्वं प्रति परावति दूरे। सप्तमीश्रुते स्थितमिति वाक्यशेषः[1]। पितुः स्वस्य आत्मीयस्य त्मना क्रोधेन निबाधितम् शापप्रदानेनान्ध्येनात्यन्तपीडितम्। किञ्च स्वर्वती सर्वैः परिचारकैस्सह इत्य। सहेत्यर्थः। इत स्थानस्थाय प्रतिनिर्देशः[1]। यस्मात् स्थानात्[1]। ऊती यज्ञान् प्रति गतय। युवो[1] युवयो। अद् शब्दस्तु पदपूरणः। चित्रा विचित्रा पूज्या वा। अभीके आसन्ननामैतत् ( द्र० निघ ३,२९ )। आसन्ने यागकाले। अभवन् भवन्ति[2]। अभिष्टय अभियाताश्च। सर्वैः परिचारकैः सह इत स्थानाद् यज्ञान् प्रत्यासन्ने यागकाले युवां गच्छथ, तत्र चाभीक्ष्ण्येन इत्यर्थः। अथवा "अभीके" ( निघ २,१७ ) इति सङ्ग्रामनाम[3]। अभिष्टिशब्दोऽपि इषेर्गत्यर्थस्य। सर्वैः सैन्यैर्दूरभि सह गच्छथो युवां सङ्ग्रामे, गत्वा चाभिगच्छथ शत्रूनित्यर्थः ॥ ८ ॥

वेङ्कट० अगच्छतम् स्तुवन्तं दूरे स्थितम् पितुः आत्मीयस्य त्यागेन निबाधितम् ऋज्राश्वम्। [4]अभ्युदयस्य ऊतयः[4] युवयोः एव अत्र भवन्ति, चित्राणि च अभ्येषणानि अभिमुखं भवन्ति ॥ ८ ॥

मुद्गल० हे अश्विनौ[5] परावति दूरदेशे सतुङ्गमध्ये स्वस्य पितुः तुमस्य त्यक्त्वा त्यागेन निबाधितम् पीडितं ऋज्राश्वम् कृपमाणम् युवां "स्तुवन्तम् अगच्छतम्" रक्षणार्थं गतवन्तौ। यस्मादेव तस्मात् हे अश्विनौ[5] स्वर्वती स्वर्णेन्य शोभनगमनयुक्ता इत इतोमुखाद् चित्रा चायनीया युवा अह युवयोरेव ऊती ऊतय रक्षा अभीके समीपे अभिष्टय सर्वैः प्राणिभिरन्वेषणीया अभवन् भवन्ति ॥ ८ ॥

**उ॒त स्या वां॒ मधु॑म॒न्मक्षि॑कारप॒न्मदे॒ सोम॑स्यौशि॒जो हु॑वन्यति ।**
**यु॒वं द॑धी॒चो मन॒ आ वि॑वास॒थोऽथा॒ शिरः॒ प्रति॑ वा॒मश्व्यं॑ वदत् ॥ ९ ॥**

उ॒त । स्या । वा॒म् । मधु॑ऽमत् । मक्षि॑का । अ॒र॒प॒त् । मदे॑ । सोम॑स्य । औ॒शि॒जः । हु॒व॒न्य॒ति॒ । यु॒वम् । द॒धी॒चः । मनः॑ । आ । वि॒वा॒स॒थः॒ । अथ॑ । शिरः॑ । प्रति॑ । वा॒म् । अश्व्य॑म् । व॒द॒त् ॥ ९ ॥

स्कन्द० उत अपि च स्या वाम् यच्छ-दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यस्यै मधु दत्तवन्तौ स्थ सा वा युवाम्। मधुमत् मधुसंयुक्तम्। मक्षिका आत्माभिप्रायमिदमेकवचनम्। सरघाख्या मक्षिकाजाति। अरपत् रप व्यक्तायां वाचि। मधु मह्यं दत्तमित्येतत्। [6]व्यक्तमुक्तवतीत्यर्थः। तदेतद्[6] कुत्सेनाप्युक्तम् 'मधु प्रियं भरथः' ( ऋ १,११२,२१ ) इति। अथवा मक्षिकाशब्दोऽत्र कुत्सितम् मक्षिकासारस्माद् दधीचो 'या वाक् सोच्यते'। सा युवाभ्याम् मधुशब्दसयुक्तं परं महत् व्याख्यातवती। किञ्च [7]मदे निमित्त एषा सप्तमी। मदे निमित्ते[7]। सोमस्य सम्बन्धिनि। प्रयोजनस्य चात्र निमित्तत्वेन विवक्षा। सोमजन्यो यो मद, तदर्थमित्यर्थः। औशिजः उशिजोऽपत्यभूत। कोऽसौ। कक्षीवान्। 'सम् उशिजः प्रवीय' पौराणिका स्मरन्ति—'उशिजो बृहदुक्थस्य' ऋषिर्दीर्घतमास्तथा। कक्षीवांश्च यथाऽङ्गिरसः स्मृता ह्याङ्गिरसा वरा ॥' इति। ■ हुवन्यति युवामाह्वयति[8]। आत्मन एवाथ परोक्षरूपेण प्रथम

1. नास्ति अ 2 2. अभीकनाम भ. 3 3. अभ्युदयस्य पतुरय वि[1] अ[2] 4 4. नास्ति मूको ५-५ °पकार्थे अ 6 6. या वाक् सोच्यते भ, उच्यते कु 7 7. सप्तमी मदे निमित्ते भ. 8-8. नास्ति भ. 9 °यद्दु° मूको 10. °मास्य° कु

पुरुषेण निर्देशः। अहमुशिजः प्रपौत्रः कक्षीवानाह्वयामीत्यर्थः। अथवा उशिजः पुत्रः औशि दीर्घश्रवाः। स युवामाहूतवान्। तदेतत् कुत्सेनाप्युक्तम् 'याभिः सुदानू' ( ऋ १,११२,१ इति। युवम् दधीचः ऋषेः मनः आ विवासथः परिचरितवन्तौ। युवामाराधितवन्तावित्य अथ[1] आराधनानन्तरम्[2] शिरः तृतीयार्थे द्वितीया। शिरसा प्रति वाम् युवां प्रति। युवा मित्यर्थः। अश्व्यम् अत्रापि तृतीयार्थे द्वितीया। अश्वस्यावयवभूतेन। वदत् उक्तवान् मध्वा परं मद्य। क.। प्रकृतत्वात् 'दध्यङ् ह यन्मध्वाथर्वणो वाम्' ( ऋ १,११६,१२ ) इति दर्शन दध्यङ्। अथवा शिरः अश्व्यम् इति स्वार्थे एव प्रथमा। शिरस एव वदनं प्रति कर्तृत्व शिर उदितवद् इति ॥ ९ ॥

वेङ्कट० अपि च सा वाम् मक्षिकाजातिः रसवत् मधु याचितवती। युवयोः सोमस्य मदे स औशिजः च वाम् आह्वयति कक्षीवान्। युवाम्[3] दधीचः ऋषेः मधुप्रदानार्थम् मनः आराधितवन्तौ ततो भवद्भ्यां 'प्रतिहितम् अस्य' अश्व्यम् तच्छिरः यज्ञ प्रति अवदत्॥ ९ ॥

मुद्गल० उत अपि च हे अश्विनौ! मधुमत् मधुमन्तौ वाम् युवाम् स्या सा मक्षिका सर मधुकामा सती अरपत् अस्तौत्। तथा औशिजः उशिजः पुत्रः कक्षीवान् सोमस्य पाने युवयोः मदे हर्षे निमित्तभूते सति हुवन्यति युवाम् आह्वयति। युवम् युवाम् तस मक्षिकायै मधु दातुं मधुविद्यार्थिनौ सन्तौ दधीचः आथर्वणस्य ऋषेः मनः चित्तं शुश्रूष आ विवासथः पर्यचरतम्। अथ अनन्तरं तस्मिन्प्रीते सति अश्व्यम् युवाभ्यां प्रतिहित अश्वस्य सम्बन्धि यत् शिरः तत् वाम् युवां प्रति मधुविद्याम् वदत् अवदत्। स ऋषि राश्वेन शिरसा उपदिष्टवानित्यर्थः ॥ ९ ॥

युवं पे॒दवे॑ पुरु॒वार॑मश्विना स्पृ॒धां श्वे॒तं त॑रु॒तारं॑ दुवस्यथः।
श॒र्यै॑र॒भिद्युं॒ पृत॑नासु दु॒ष्टरं॑ च॒र्कृत्य॒मिन्द्र॑मिव चर्षणी॒सह॑म् ॥ १० ॥

यु॒वम्। पे॒दवे॑। पु॒रु॒ऽवार॑म्। अ॒श्वि॒ना॒। स्पृ॒धाम्। श्वे॒तम्। त॒रु॒तार॑म्। दु॒व॒स्य॒थः।
श॒र्यैः॑। अ॒भिऽद्यु॑म्। पृत॑नासु। दु॒स्तर॑म्। च॒र्कृत्य॑म्। इन्द्र॑म्ऽइव। च॒र्ष॒णि॒ऽसह॑म्। ॥ १० ॥

स्कन्द० युवम् युवाम् पेदवे राज्ञे पुरुवारम् बहुना वरणीयं वारयितारं वा शत्रूणाम् "हे अश्विनौ![4] श्वेतम् अश्वम् स्पृधाम् सङ्ग्रामाणाम् तरुतारम्[5] निस्तारितारम् दुवस्यथः[6] पेदव इति सम्प्रदानश्रुतेः दुवस्यतिरत्र दानार्थः। दत्तवन्तौ। कीदृशम्। उच्यते। अभिद्युम् 'अभिगतं दीप्तिम्'। दीप्तमित्यर्थः। शर्यैः शर्या इषवः[7] तैः। पृतनासु सङ्ग्रामेषु। दुष्टरम् 'अवतिरति' ( निघ २,१९ ) इति[8] वधकर्मसु पाठाद् तिरतिर्हननार्थः। तस्येदं रूपम्। दुर्हणम्। चर्कृत्यम् इदमपि कृन्ततेर्वधकर्मणः॥ ( द्र० निघ २,१९ ) रूपम्। भावयं हन्तारम्। इन्द्रम् इव चर्षणीसहम् मनुष्याणां शत्रुभूतानामभिभवितारम् ॥ १० ॥

---

1. अथ[illegible] अ. 2. 'अप्यानन्तर' मूको. 3. नास्ति [illegible] क ग्रन्थे. [illegible] ... [illegible] 5-5. नास्ति भ. 6. [illegible] भ. 7. दुव° भ. 8-8. [illegible] भ. 9. [illegible] 4-4. प्रतिनिहितं दु. [illegible] भ. 10. °[illegible] भ. 11. [illegible] दु.

वेङ्कट० युवाम् पेरवे राज्ञे[१] बहुभिः वरणीयम् अश्विनौ! शत्रूणाम् तारकम्[२] श्वेतम् अश्वम् अदत्तम्[३] निशरणकुशलैः सङ्ग्रामेषु तरितुम् अशक्यम्[४] अभिगतदीप्तिम्[५] सङ्ग्रामेषु पुनःपुनः प्रयोज्यम् इन्द्रम्[६] इव शत्रूणाम् अभिभवितारम् ॥ १० ॥

मुद्गल० हे अश्विना अश्विनौ! पेदवे पेदुनाम्ने पुरुवारम् बहुभिर्वरणीयम् स्पृधाम् सङ्ग्रामे स्पर्धमानानां शत्रूणाम् तरुतारम् तारकम् श्वेतम् शुभ्रवर्णम् इन्द्रात् लब्धमश्वम् युवम् युवाम् दुवस्यथः दत्तवन्तौ। पुनरपि कीदृशम्। शर्यैः योद्धृभिः पृतनासु सङ्ग्रामेषु दुस्तरम् तरितुमशक्यम् अभिद्युम् अभिगतदीप्तिम् चर्कृत्यम् सर्वेषु कार्येषु पुनःपुनः प्रयोज्यम् इन्द्रमिव चर्षणीसहम्। इन्द्रो यथा शत्रून् अभिभवति एवं शत्रुजनानामभिभवितारमित्यर्थः ॥ १० ॥

इति प्रथमाष्टके अष्टमाध्याये एकविंशो वर्गः ॥

[ १२० ]

का रा॑धद्धोत्रा॑श्विना वां को वां जोष॑ उ॒भयो॑ः । क॒था वि॑धा॒त्यप्र॑चेताः ॥१॥

का । रा॒ध॒त् । होत्रा॑ । अ॒श्वि॒ना॒ । वा॒म् । कः । वा॒म् । जोषे॑ । उ॒भयो॑ः । क॒था । वि॒धा॒ति॒ । अप्र॑ऽचेताः ॥

स्कन्द० किंशब्दोऽत्र प्रकारे द्रष्टव्यः[१]। का किंप्रकारा "राधत् आराधयति"। होत्रा हूयतेऽसाविति होत्रा आहुतिः। यज्ञनाम वा होत्राशब्दः। आहुतिरिज्या वा। हे अश्विना! वाम् युवाम्। कः किंप्रकारो यजमानः स्तोता वा। वाम् युवयोः जोषे प्रीतौ[२]। साकाङ्क्षत्वाद्वर्तमान इति वाक्यशेषः। उभयोः द्वयोरपि सहितयोः। किंप्रकारस्य यजमानस्य स्तोतुर्वा युवामुभावपि प्रीयेथे इत्यर्थः। कथा केन प्रकारेण विधाति 'युवां परिचरति' अप्रचेताः अज्ञः[३]। एतदस्मै कथय। तत् सुखमहं करोमीत्यर्थः ॥ १ ॥

वेङ्कट० कीदृशी नाम[९] वाम्[१०] आराधयति अश्विनौ! कः वाम्[११] स्तोता युवयोः उभयोः पर्याप्तयर्थं भवति[१२]। केन[१३] प्रकारेण वाम् अज्ञः परिचरति ॥ १ ॥

मुद्गल० 'का राधत्' इति द्वादशर्चं पञ्चमं सूक्तम्। कक्षीवान् ऋषिः। आद्या गायत्री। द्वितीया 'विद्वांसौ' इत्येषा ककुप्, मध्यमपादस्य द्वादशाक्षरत्वात्। 'मध्यमश्चेत् ककुप्' (ऋअ १,५,४) इति तल्लक्षणम्। तृतीया 'ता विद्वांसा' इत्येषा ककुप्। मध्यमपादस्य काविराट् 'नवकयोर्मध्ये जागतः काविराट्' (ऋअ १,५,३) इत्युक्तलक्षणत्वात्। चतुर्थी [१४]'वि पृच्छामि' इत्येषा[१५] नष्टरूपी, 'नववैराजत्रयोदशैर्नष्टरूपी' (ऋअ १,६,६) इत्युक्तलक्षणोपेतत्वात्। 'प्र या घोषे' इति पञ्चमी तनुशिरा, 'एकादशिनोः परः षट्कस्तनुशिरा' (ऋअ १,५,५) इत्युक्तलक्षणत्वात्[१६]। 'श्रुतं गायत्रम्' इत्येषा षष्ठी। यद्यपि पादसङ्ख्यया न[१७] उष्णिक्, तथाप्यक्षरसङ्ख्यया

---

१. नास्ति वि[१] अ[१] स सर्व. २. तारके वि[१] अ[१]. ३. नास्ति वि[१] अ[१]. ४. उपदं कु. ५. अभिगतदीप्तिः वि[१] अ[१]. ६. नास्ति अ. ७-७. 'आराधयं राध' अ. ८-८. 'वति अ. ९. 'कः मूको १०. युवाम् कु. ११. वा कु. १२. नास्ति वि[१] सर्व. १३. तेन वि[१] अ[१]. १४-१४. नास्ति मूको. १५. लक्षणात् मै[१]. १६. नास्ति मूको.

उष्णिक्। 'युवं हि' इति सप्तमी विष्टारबृहती 'अष्टिनोर्मध्ये दशकौ विष्टारबृहती' ( ऋअ १, ७, ५ ) इति लक्षणोपेतत्वात्। 'आ कस्मै' इति अष्टमी कृतिः 'जागतावष्टकश्च कृतिः' ( ऋअ १,६,३ ) इत्युक्तलक्षणसद्भावात्। 'दुहीयन्' इति नवमी विराट्। दशम्याद्यास्तिस्रो गायत्र्यः। अश्विनौ देवता[1] ॥

हे अश्विना! अश्विनौ वाम् युवाम् कः होत्रा वाङ्नामैतत् ( तु. निघ १,११ )। कीदृशी स्तुतिलक्षणा वाक् राधत् आराधयति प्रीतौ करोति। युवयोर्माहात्म्यानुरूपा स्तुतिर्नास्तीत्यर्थः। किञ्च वाम् युवयोरुभयोः जोषे जोषणे सेवने समर्थः कः स्तोता विद्यते। युष्मद्गुणाभिज्ञः कश्चिदपि नास्तीत्यर्थः। अप्रचेताः युवयोर्माहात्म्यम् अजानंश्च कथा केन प्रकारेण विधाति युवां परिचरति[2]। युष्मद्विषयं परिचरणमपि न कर्तुं शक्यत इत्यर्थः ॥ १ ॥

विद्वांसाविद् दुरः पृच्छेदविद्वानित्थापरो अचेताः। नू चिन्नु मर्ते अक्रौ ॥२॥

विद्वांसौ। इत्। दुरः। पृच्छेत्। अविद्वान्। इत्था। अपरः। अचेताः। नु। चित्। नु। मर्ते। अक्रौ ॥२॥

स्कन्द० परस्यामृचि यच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः[3]। तया[4] चैकवाक्यता। यौ विद्वांसौ जानन्तौ। इत्[5] इत्[5] पदपूरणः। दुरः स्तुतेः द्वाराणि। उपायान्[6] इत्यर्थः। पृच्छेत्[7] पृच्छति सर्व स्तोता। अविद्वान् इत्था। 'इत्था' ( निघ ३,१० ) इति सत्यनाम। सत्यमेवाजानन् अशाठ्येन। अपरः[8] न्यूनशक्तिः अचेताः ज्ञातुमसमर्थः [9]स्वयम्। नु चित् नु नु। इति[9] पदपूरणः। चित् शब्द मुख्यार्थे। पुराणावेव। मर्ते मर्त्ये। अत्र सप्तमी। मरणधर्मस्य मनुष्यस्य। अक्रौ आङ्पूर्वस्य क्रमेरिदं छान्दसं रूपम्। आक्रमितारौ। वशीकर्तारावित्यर्थः ॥ २ ॥

वेङ्कट० विद्वांसौ एव द्वाराणि प्रष्टुम् अर्हति[9] अविद्वान् इत्थम् अन्यः चेतोविवर्जितः[10]। क्षिप्रम् एव मर्त्येषु अनाक्रान्तौ ॥ २ ॥

मुद्गल० इत्था इत्थम्, अनेन पूर्वोक्तप्रकारेण अविद्वान् अज्ञः स्तोता विद्वांसौ इत् सर्वज्ञावश्विनावेव दुरः द्वाराणि स्तुतिपरिचरणयोरुपायभूतान्[11] मार्गान्[12] पृच्छेत् प्रष्टुमर्हति। अपरः अश्विभ्याम् अन्यः सर्वोऽपि अचेताः चेतसा ज्ञानेन रहितः। तस्मादश्विनावेव पृच्छेदित्यर्थः। तौ च अक्रौ शत्रुभिरनाक्रान्तावश्विनौ नु चित् क्षिप्रमेव मर्ते मनुष्ये स्तोतरि भक्तानुग्राहकतया सन्निधत्त इति वाक्यशेषः। ॥ पूरणः ॥ २ ॥

ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्म वोचेतमद्य। प्रार्चद् दयमानो युवाकुः ॥ ३ ॥

ता। विद्वांसा। हवामहे। वाम्। ता। नः। विद्वांसा। मन्म। वोचेतम्। अद्य। प्र। आर्चत्। दयमानः। युवाकुः।

स्कन्द० तौ[1] विद्वांसौ हवामहे आह्वयामो वयम्। युवामाहूतौ च सन्तौ नः अस्मभ्यम्। विद्वांसौ मन्म

1. नास्ति भै[1]; वे वे[1]. 2. प्रति चरति मूको. 3. °दाभेः अ. 4. तथा अ. 5-5. नास्ति अ. |नास्ति मूको. 6. उपाय अ. 7. नास्ति अ. 8. °पर शत्र्वौः अ. 9. अर्हन्ति वि[1] अ[2]. चेतसाविज्ञः कु. 11. परिचर° भै[2]. 12. नास्ति मूको.

मन्यतीत्यर्चतिकर्मा (द्र. निघ २,१४)। मननं मन्म स्तुतिः। यथा युवामेव स्तुमः तां वोचेतम् कथयतमित्याशास्महे। [1]अथ अस्मिन्नहनि। कस्मात्। उच्यते[1]। यस्मात् प्र आर्चत् अर्चतिरत्र शुद्धोऽपि सम्पन्तो द्रष्टव्यः। उत्तमपुरुषस्य स्थाने प्रथमपुरुषः। प्रकर्षेणार्चिचिषामि। स्तोतुमिच्छामीत्यर्थः। दयमानः दधद्धवींषि। युवाकुः युष्मत्कामः ॥ ३ ॥

वेङ्कट० तौ[2] विद्वांसौ ह्वयामहे वाम्[3]। तौ अस्माकं विद्वांसौ अभिलषितं स्तोत्रं वोचेतम्। अद्य स्तौति हवींषि ददत् युष्मत्कामः कक्षीवान्[4] ॥ ३ ॥

मुद्गल० हे अश्विनौ! विद्वांसा [5]सर्वज्ञौ ता[5] वाम् तौ युवाम् हवामहे आह्वयामहे। ता तौ आहूतौ विद्वांसा अभिज्ञौ युवाम् नः अस्मभ्यम् मन्म मननीयं ज्ञातव्यं स्तोत्रम् अद्य अस्मिन्काले वोचेतम् ब्रुवाणौ भूयास्तम्। ■ अहम् युवाकुः युवां कामयमानः दयमानः युवाभ्यां हविः प्रयच्छन् प्र आर्चत् आर्चे प्रकर्षेण स्तौमि ॥ ३ ॥

वि पृच्छामि पाक्याऽ३ न देवान् वषट्कृतस्याद्भुतस्य दस्रा।
पातं च सह्यसो युवं च रभ्यसो नः ॥ ४ ॥

वि। पृच्छामि। पाक्या। न। देवान्। वषट्ऽकृतस्य। अद्भुतस्य। दस्रा।
पातम्। च। सह्यसः। युवम्। च। रभ्यसः। नः ॥ ४ ॥

स्कन्द० ■ विविधं [6]स्तुत्युपायान् पृच्छामि[6] पाक्या भूत्वेत्र काले वयमल्पयो द्रष्टव्यः। प्रज्ञायाश्च पद परिपक्वत्वं तदश्विनोरेवापादियते। परिपक्वप्रज्ञौ युवाम्। न देवान् न तु देवानन्यान्। युवां पृच्छामि नान्यान् [7]देवानित्यर्थः। एवम्[7] अस्मत्स्तुतिपरोऽयमिति ज्ञात्वा वषट्कृतस्य अद्भुतस्य वषट्कारेण कृतो होमः। अद्भुतम् (निघ ३,२) इति महन्नाम। तृतीयार्थे चोभयत्र षष्ठी। वषट्कारहुतेन सोमेन महताऽऽसमर्थेन। साकाङ्क्षत्वात् पृच्छमिति वाक्यशेषः। हे दस्रा![8] पातम् च रक्षतं च सह्यसः सहीयसः अतिशयेनाभिभवितुः शत्रुबलात्। युवाम् च रभ्यसः रभ्यो रभीयः अतिशयेन वेगवत्। यत्नश्च आस्मात् परो द्रष्टव्यः[9]। वेगवत्तराच्च। नः अस्मान् ॥ ४ ॥

वेङ्कट० पक्वप्रज्ञः[9] विद्वान् अहं भूत्वा वषट्कृतस्य महतः सोमस्य[8] पानार्थम् न अन्यान् देवान् वि[1] पृच्छामि। युवाम्[10] एव मदीयं सोमं सहीयांसं[11] पिबतम्, कुरुतम् च अस्मान् वेगवत्। ॥ ४ ॥

मुद्गल० हे अश्विनौ! युवम् युवाम् वि पृच्छामि विशेषेण प्रष्टुमिच्छामि। पाक्या न पक्वप्रज्ञान् परिपक्वमतीन् अन्यान् देवान् न पृच्छामि। किन्तु युवामेव सर्वज्ञौ पृच्छामीत्यर्थः। हे दस्रा! दर्शनीयावश्विनौ! तौ युवाम् वषट्कृतस्य वषट्कारेणाहौ हुतस्य अद्भुतस्य आश्चर्यभूतस्य महतः सह्यसः अतिशयेन बलवतः बलोत्पादकस्य सोमलक्षणमेकदेशम् पातम् च, नः अस्मान् च रभ्यसः अतिशयेन रभस्विनः वेगोपेतान् कुरुतम् ॥ ४ ॥

1-1. नास्ति अ. 2. ता वि[1] अपं. 3. नास्ति वि[1] अ[1]. 4. नास्ति वि[1] अपं. 5-5. युदितम् मै[1]. 6. तस्मा कु. 7. नकुलं[7] वि[1][2] अ[1] अपं. 8. सोमस्य वि[1] अ[1]. 9. नास्ति वि[1] अ[1]. 10. याम् वि[1] अ[1]. 11. महीयास वि[1] अ[1].

प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियो वाम् । प्रैषयुर्न विद्वान् ॥५॥

प्र । या । घोषे । भृगवाणे । न । शोभे । यया । वाचा । यजति । पज्रियः । वाम् । प्र । इषऽयुः । न । विद्वान् ॥

स्कन्द० प्र या घोषे घोष्यमाणत्वाद् घोषः स्तोमः, तस्मिन् । सप्तमीश्रुतेः साकाङ्क्षत्वात् स्थितेति वाक्यशेषः । भृगवाणे न भृगवाणशब्दो भृगोः पर्यायः[१] । षष्ठ्यर्थे च सप्तमी । भृगोरिव । प्र शोभे प्रकर्षेण शोभते । यया वाचा यजति तृतीयपादाद्यः प्र-शब्द इहापकृष्यः । प्रकर्षेण यजति । पज्रियः पाजो हविर्लक्षणमन्नम्, तद्वान् पज्रियः । अथवा पज्रा अङ्गिरसः, तेषामपत्य-भूतः पज्रियः । कोऽसौ । कक्षीवान् । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः । कं यजति । उच्यते । वाम् युवाम् । क इव । उच्यते । इषयुः न अन्नकाम इव कश्चित् । विद्वान् जानन् । किम् । सामर्थ्याद् यष्टुं वा, युष्मन्माहात्म्यं वा साकाङ्क्षत्वात् ॥ ५ ॥

वेङ्कट० घोषो नाम ऋषिः । तस्मिन् या वाक् भृगौ च प्रकर्षेण शुशुभे युष्मत्स्तुतिभूता । 'यया च[२] तादृश्या वाचा पज्रकुले[३] जातः कक्षीवान् 'अधुना वाम् यजति । स तया स्तुत्या कक्षीवान्' इदानीम् अन्नकामः[६] प्रभवतु ॥ ५ ॥

मुद्गल० हे अश्विनौ ! प्रभवति समर्था भवति सा वाक् या वाक् युष्मत्स्तुतिरूपा घोषे घोषा-ख्यायाः पुत्रे सुहस्त्याख्ये ऋषौ भृगवाणे न भृगौ च शोभे शोभते । यया च स्तुतिलक्षणया वाचा पज्रियः पज्रा अङ्गिरसः, तेषां कुलोत्पन्नः कक्षीवान् वाम् युवाम् यजति पूजयति स्तौति । सापि शोभत इत्यर्थः । इषयुः न इषम् अन्नम् आत्मनः कामयमानश्च विद्वान् स्तुत्यभिज्ञः कक्षीवान् ऋषिः प्रभवतु । युष्मदनुग्रहात् सम्पूर्णकामो भवत्वित्यर्थः ॥ ५ ॥

इति प्रथमाष्टके अष्टमाध्याये द्वाविंशो वर्गः ॥

श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वाम् । आक्षी शुभस्पती दन् ॥६॥

श्रुतम् । गायत्रम् । तकवानस्य । अहम् । चित् । हि । रिरेभ । अश्विना । वाम् ।
आ । अक्षी इति । शुभः । पती इति । दन् ॥ ६ ॥

स्कन्द० श्रुतम् शृणुतम् लडर्थे लोट् । शृणुथः । गायत्रम् 'गायति' ( निघ ३,१४ ) इत्यर्चतिकर्मसु पाठाद् अर्चति-कर्मायम् । गीयतेऽनेनेति गायत्रं स्तोत्रम् । तकवानस्य तकतेर्गतिकर्मणः ( तु निघ २,१४ ) एतद्रूपम् । उपगच्छतः स्तोतुः । एतत् ज्ञात्वा अहम् चित् अहम् अपि । हि-शब्दस्तु पदपूरणः । रिरेभ स्तुतवान् स्तौमि वा । हे अश्विनौ ! वाम् युवाम् । किञ्च अक्षी अक्षिणी हे शुभः पती ! वृष्टिलक्षणस्योदकस्यापि पती ! । 'आ दन्' भूतकालेऽत्र शत्रुप्रत्ययो द्रष्टव्यः । व्यत्ययेन चैकवचनम् । मर्यादया दत्तवन्तौ युवाम् ऋत्वाह्वाय ॥ ६ ॥

१. नास्ति भ. २. च या कु. ३. पज्रकुले वि[२७] भ[१]; पज्रकुले वि[१] अ[१]. ४-४. नास्ति कु. ५. नास्ति वि[२३] स मूर्ध. ६. नास्ति भ.

वेङ्कट० अश्रृणुतम्[१] गायत्रम् [२]साम अभ्यस्त्वात् स्खलितं[२] गच्छतः अन्धाश्वस्य[३]। सः हि अहम् [४]इव वाम् अश्विनौ![४] तुष्टाव अक्षी आददानः भवद्भ्याम् शुभः पती! ॥ ६ ॥

मुद्गल० हे अश्विना! अश्विनौ! गायत्रम् गातव्यं गायत्रीयुक्तं स्तोत्रम् तत्करानस्य स्खलद्गतेरन्धस्य ऋज्राश्वस्य सम्बन्धि श्रुतम् अश्रृणुतम्, अहम् चित् अहमिव वाम् युवाम्[५] सः हि रिभ स्तुतवान् किं कुर्वन्। हे शुभः पती! शोभनस्य कर्मणः पालकौ पितरौ! अक्षी युवाभ्यां दत्ते चक्षुषी आ दन् आददानः। तस्मै इव मह्यम् अप्यभिमतफलं प्रयच्छतम् इति भावः ॥ ६ ॥

युवं ह्यास्तं महो रन् युवं वा यन्निरततंसतम् ।
ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः ॥ ७ ॥

युवम् । हि । आस्तम् । महः । रन् । युवम् । वा । यत् । निःऽअततंसतम् ।
ता । नः । वसू इति । सुऽगोपा । स्यातम् । पातम् । नः । वृकात् । अघऽयोः ॥ ७ ॥

स्कन्द० द्वितीयपादस्थो यच्छब्दः प्रथमपादेऽप्यनुपकर्षः। यौ युवाम्। हि-शब्दस्तु पदपूरणः। आस्तम् अस भुवि। लडर्थे चात्र लङ्। भवथः। महः महतो धनस्य रन् रा दाने। प्रथमासमानाधिकरणश्चात्र शतृप्रत्ययः। दातारौ। युवम्[६] [७]वा यत् या[७]-शब्दः वाशब्दस्यार्थे। यच्छब्दस्तु खलु पुंद्वितीयाविभक्तिश्च[८]। यौ च युवाम् निरततंसतम् तसु उपक्षये इत्येतस्येदं रूपम्, न लभते। अत्यर्थमुपक्षयथः[९] यस्मै देयं तस्मै च धनं दत्थः,[११] न उपक्षयितव्यः तमुपक्षयथ इत्यर्थः। ता तौ नः अस्मान् हे वसू! प्रशस्यौ! वसुमन्तौ! वा सुगोपा सुष्ठु गोप्तारौ स्यातम् भवतम्। पातम् रक्षतम् नः अस्मान् वृकात् प्राणिविशेषात् अघायोः [१२]पापकामात्। भक्षयितुमिच्छत[१२] इत्यर्थः। अथवा वृक वृक इत्यस्य वृकशब्द आदानार्थवचनः। आदातुश्चोरादेः[१३] पापकामात् ॥ ७ ॥

वेङ्कट० युवम्[१४] हि आस्तम् आढ्यता[१५] महतः धनस्य दातारौ। युवाम् एव यदि कञ्चन[१६] निरततंसतम्[१७] दासिरुपक्षयकर्तारौ। आढ्यं दरिद्रं च पुरुषं कुरुथः। तौ नः वासयितारौ! [१८]सुगोप्तारौ भवतम्[१८]। रक्षतं[१९] च अस्मान् [२०]स्तेनाद् अघम् इच्छतः[२०]।

मुद्गल० हे अश्विनौ! महः महतः धनस्य रन् रातारौ दातारौ युवम् युवाम्[२१] कञ्चन आस्तम् [२२]युवम् युवाम् वा यत्[२२] निरततंसतम् धनानि निरगमयतम्। रक्षकौ विनाशकावपि युवामेवेत्यर्थः। हे वसू! वासयितारावश्विनौ! ता[२३] तादृशौ[२४] युवाम् नः अस्माकम् सुगोपा सुष्ठु गोपायितारौ रक्षितारौ स्यातम् भवतम्। अपि च नः अस्मान् अघायोः अघं पापफलमस्माकमिच्छतः वृकात् स्तेनात् पातम् रक्षतम्। हि पूरणः ॥ ७ ॥

---

१. श्रुत कु; माश्रुतम् वि¹ स. २-२. सामाभ्यासात् स्तोत्रं पतितं वि¹ अ¹. ३. कजारम वि¹.
४-४. युवामिव वि¹ अ¹. ५. नास्ति मै¹. ६. युवम् कु¹. ७-७. नास्ति भ. ८. द्वितीया° भ. ९. निरन्तर
सन्तत भ. १०. °क्षयथः कु. ११. दत्ता इत्यर्थः भ; दत्तं कु. १२-१२. पाप ··· भ. १३. आदातुः भ.
१४. युवाम् वि¹ अ¹. १५. आढ्य वि¹ अ¹. १६. किं वि¹; किञ्चन कु. १७. °तंसतम् अत्यर्थमुपक्षय
कुरुतः वि¹ अ¹. १८-१८. सुगोप्तारौ भवतम् वि¹ अ¹. १९. रक्षतं वि¹ अ¹; नास्ति वि¹ अ¹.
२०-२०. सांप (?°प) मि[च्छ] नः वि¹ अ¹. २१. युवां मद मूको. २२-२२. नास्ति मूको. २३. ता
वा मूको. २४. °शो युवम् मूको.

**मा कस्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः । स्तनाभुजो अशिश्वीः ॥८॥**

मा । कस्मै । धातम् । अभि । अमित्रिणे । नः । मा । अकुत्र । नः । गृहेभ्यः । धेनवः । गुः । स्तनऽभुजः । अशिश्वीः ॥ ८ ॥

स्कन्द० मा कस्मै चित् अभि धातम् अयं दधातिर्दानार्थः । आभिमुख्येन 'दत्तम् । किम् । द्वितीये[1] पादे धेनूनामुपादानात् तत्साम्निध्याद् धेनूर्वा धनं वा । अमित्रिणे अमित्राय । नः अस्माकम् । मा च अकुत्र यत्र ज्ञायते किं तदिति तदकुं चोरस्थानम् तदाकुत्र । अज्ञेये चोरस्थान इत्यर्थः । अस्माकं सम्बन्धिभ्यः गृहेभ्यः युवाभ्यां दत्ताः धेनवः दुह्यन्ते , या गाव. ताः । गुः गमन् । चोरैर्मापहारिषतेत्यर्थः[2] । स्तनभुजः स्तना भुज्यन्ते यासां ताः स्तनभुजः । दोग्ध्र्यः[3] इत्यर्थः । अशिश्वीः शिशवो बाला वत्सकाः, तद्रहिताः [3] गृहेषु मृतवत्सका इत्यर्थः । युष्मत्प्रसादेनेति शेषः ॥ ८ ॥

वेङ्कट० मा अस्माद् कस्मै चित् मैत्रीवर्जिताय अभि दत्तम्[4] । मा च अस्मद्गृहेभ्यः[5] धेनवः अप्रज्ञाते[6] देशे गमन्[7] स्तनं वत्सान् भोजयन्त्यः स्तनैर्वा अस्मान् रक्षन्त्यः शिशुवर्जिताः । वत्सान् 'अपहाय मा गमन्निति'[8] ॥ ८ ॥

मुद्गल० हे अश्विनौ ! अमित्रिणे अमित्रं मित्ररहितत्वम् तद्वते कस्मै चिदपि शत्रवे नः अस्मान् मा अभि धातम् आभिमुख्येन मा स्थापयतम् । अपि च नः अस्माकम् गृहेभ्यः सकाशात् स्तनभुजः स्तनैर्वत्सान् मनुष्यांश्च पालयन्त्यः धेनवः गावः अशिश्वीः शिशुना वत्सेन विरहिता अस्मदीये गृहेऽप्रयाता वा सत्यः अकुत्र चित् अस्माभिरनाम्ये प्रदेशे मा गुः मा गच्छन्तु ॥ ८ ॥

**दुहीयन् मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै ।**
**इषे च नो मिमीतं धेनुमत्यै ॥९॥**

दुहीयन् । मित्रऽधितये । युवाकु । राये । च । नः । मिमीतम् । वाजऽवत्यै । इषे । च । नः । मिमीतम् । धेनुऽमत्यै ॥ ९ ॥

स्कन्द० दुहीयन् दुह्यताम् मित्रधितये धेट् पाने इत्यस्य दधातेर्वा[9] दानार्थस्येदं रूपम् । मित्राणां पानार्थं मित्रेभ्यो वा दानार्थम् । युवाकु यु मिश्रणे । मिश्रणीयं पयः । पानार्हमित्यर्थः[10] । युष्मत्कामं वा युवाकु । युवयोः यागयोग्यमित्यर्थः[11] । किञ्च राये च सर्वत्रात्र द्वितीयार्थे चतुर्थी । धनम् च नः अस्मभ्यम् मिमीतम् मिमीहिर्यांच्ञाकर्मा (तु. निघ ३,१९) । याच्ञया अत्र तत्पूर्वकं दानं लक्ष्यते । दत्तम् । वाजवत्यै बलवतीम् । बलसहितं धनम्, न केवलमित्यर्थः । इषे च अन्नं च । नः अस्मभ्यम्[12] मिमीतम् दत्तम् । धेनुमत्यै धेनुमतीम् । धेनुभिस्सहितमन्नम्, न केवलमित्यर्थः ॥ ९ ॥

---

१-१. नास्ति अ. २. 'हरिषते' मूको. ३. त्रुटितम् मूको. ४. भरत वि[1] अ[1], ५. अस्मान् गृ[1] वि[1] अ[1]. ६. नास्ति वि[1]. ७. गमन् ख; नास्ति वि[1] अपं. ८-८. गमन्निति वि[1] अ[1], † भगमन्नपि[?]ति वि[1][?] अ[1], ख अपं; गमन् कु. ९. नास्ति अ. १०. 'नार्थमि' अ. ११. योग्यमित्यर्थं अ. १२. वं कु. १३. नास्ति कु.

वेङ्कट० [1]युष्मत्कामाः[‡] मित्रधारणार्थं कामाद् युवाम् दुहीयन् तथा सति धनाय बलवते अस्मान् कुरुतम् तथा धेनुयुक्ताय च अन्नाय कुरुतम् इति[1] ॥ ९ ॥

मुद्गल० हे अश्विनौ! युवाकु युवां कामयमानाः स्तुतिभिर्यावयितारः स्तोतारः मित्रधितये मित्राणां बन्धुजनानां धारणार्थम् दुहीयन् युष्मत्सकाशाद् धनानि दुहन्ति प्राप्नुवन्ति। अतः नः अस्मानपि वाजवत्यै अश्वयुक्ताय च राये धनाय मिमीतम् कुरुतम् तथा धेनुमत्यै धेनुभिर्युक्तायै इषे अन्नाय च नः अस्मान् मिमीतम् कुरुतम्। अस्मभ्यं स्तोतृभ्यः अश्वयुक्तं धनं गोयुक्तमन्नं[2] च प्रयच्छतमित्यर्थः ॥ ९ ॥

अश्विनोरसनं रथमनश्वं वाजिनीवतोः । तेनाहं भूरि चाकन ॥ १० ॥

अश्विनोः । असनम् । रथम् । अनश्वम् । वाजिनीऽवतोः । तेन । अहम् । भूरि । चाकन ॥ १० ॥

स्कन्द० अश्विनोः स्वभूतम् असनम् रथम् स्तुतिभिः सम्भक्तवानहम्। स्तुतवानित्यर्थः। कीदृशम्। अनश्वम् अश्ववर्जितम्। वाजिनीवतोः वाजो बलम्, तद्वती सेना वाजिनी। अन्नं वा हविर्लक्षणं वाजम्, तद्वती। सम्राडीनादिपाठसन्ततिर्वाजिनी, तद्वतोः। स्वार्थिको वा एको मत्वर्थीयः, बलवतोरन्नवतोर्वा। तेन स्तुतेन हेतुना अहम् भूरि बहु चाकन कामयेऽश्विनौ। यस्मात् तं रथं स्तुतवान्[3] तस्माद्[4] बहु यद्यदभिप्रेतं तत्तदेवमश्विनौ याचे इत्यर्थः ॥ १० ॥

वेङ्कट० अश्विनोः अभजम् रथम्[5] अश्वरहितम् बलवतोः। तेन अहम् बहु कामये ॥ १० ॥

मुद्गल० वाजिनीवतोः वाजम् अन्नं, तद्वत्क्रियावतोः अश्विनोः अनश्वम् अश्वरहितम् अश्वराहित्येऽपि सामर्थ्यातिशयेन गच्छन्तम् रथम् असनम् अहम् स्तोता समभजम्। तेन च रथेन भूरि प्रभूतं श्रेयः चाकन कामये ॥ १० ॥

अयं समह मा तनूह्याते जनाँ अनु । सोमपेयं सुखो रथः ॥ ११ ॥

अयम् । समह । मा । तनु । ऊह्याते । जनान् । अनु । सोमऽपेयम् । सुऽखः । रथः ॥ ११ ॥

स्कन्द० [6]'कतरोऽयं रथः'[6]। उच्यते। यः अयम् हे समह! महः उत्सवः पूजा वा,[7] सहितो महेन समहः। नित्योत्सवयुक्तः पूज्यो वा। व्यत्ययेन चार्थैकवचनम्। "हे समहौ! नित्योत्सवयुक्तौ पूज्यौ वे"त्यर्थः। मा माम् तनु छन्दसोऽयं लोट्। प्रथमपुरुषस्य स्थाने मध्यमपुरुषः। तनुते। सर्वकामसमृद्ध्या विस्तारवन्तीत्यर्थः। ऊह्याते प्राप्यते च युवाभ्याम्। जनान् अनु मनुष्यान् शत्रुभूतान् प्रति सोमपेयम् सोमपानं च प्रति सुखः रथः ॥ ११ ॥

वेङ्कट० अयम् स्व[8] स्तुतियुक्त रथः! माम्[9] विस्तीर्णं कुरु[9]। सोऽयम् ऊह्याते भविष्यताम्[10] जनेषु[8]

---

१-१. नास्ति वि[1] अ[1]. † युष्मान् कामाः वि[1] अपं. ‡ नास्ति कु. २. गोयु[*] मूको.
३. स्तुता भ. ४. तस्मान् कुः कस्यात् भ. ५ नास्ति वि[1] अ[1] ६-६. नास्ति कु, कतरो ये रथः भ.
७. नास्ति वि[1], अ[1,2] ८. स्वे वि[1] अ[2]. ९. मा वि[2-1] अ[1] त कुरु १०. भविनेषु वि[1] अ[1].

सोमपेय प्रति सुदास[1] रथ ॥ ११ ॥

मुद्गल० हे समह! धनेन सहित[1] रथ[1] अयम् पुरोवर्ती त्वम् मा माम् तनु विस्तारय पुत्रपौत्रधनादिभि समृद्ध कुरु। ■ च सुख शोभनावकाश रथ जनान् अनु स्तोतृजनेषु सोमपेयम् सोमपान प्रति ऊधाते उह्यते अश्विभ्या नीयते। अतोऽश्विभ्या यद्दीयते तत्सर्व रथ एव ददातीति रथ सम्बोध्य प्रार्थना ॥ ११ ॥

अध॒ स्वप्न॑स्य॒ निर्वि॑दे॒ऽभु॑ञ्जतश्च रे॒वतः॑ । उ॒भा ता बस्रि॑ नश्यतः ॥ १२ ॥

अध॑ । स्वप्न॑स्य । निः । वि॒दे॒ । अभु॑ञ्जतः । च॒ । रे॒वतः॑ । उ॒भा । ता । बस्रि॑ । न॒श्य॒तः॒ ॥१२॥

स्कन्द० उत्तमा स्वप्ननाशिनी[1]। पञ्चानामाश्विनाना सूक्तानामुत्तमा या त्रस्[?] एषा स्वप्ननाशनार्था। अध-शब्दोऽत्र पदपूरण, एतस्मादित्यस्यार्थे वा। एतस्मात् पञ्चभि सूक्तै अश्विनो[1] स्तुति करणात्[1]। स्वप्नस्य स्वप्नशब्देनात्र य शयितुर्दु स्वप्न दृश्यते स उच्यते, न स्वप्नमात्रम्। द्वितीयार्थे च षष्ठी। दु स्वप्नम्। नि विदे विद सत्तायामित्यस्यान्त र्णीतण्यर्थस्य रूपम्। निर्वेदयामि निस्सत्ताक[3] करोमि। नाशयामीत्यर्थ। न च केवल तु स्वप्नम्। किं तर्हि। अभुञ्जत च इयमपि द्वितीयार्थे एव षष्ठी। अभुञ्जान च। भोक्तु[4] चासमर्थमित्यर्थ। कम्। सामर्थ्यादात्मानम्। रेवत धनवत[5]। सति भोज्ये या भोक्तारामि[?][6] तादृशेत्यर्थ। नाशयामीति[?] उभा उभावपि ता तौ बस्रि निपातोऽय[7] क्षिप्रार्थ। क्षिप्रम्। नश्यत[8] लोडर्थेऽत्र लट्। अश्विनो प्रसादेन मत्तो नश्यताम् ॥ १२ ॥

वेङ्कट० भिक्षमाण कक्षीवान्[8] अलभमानो धनम् कदर्यं निन्दति[9]। अध[10] स्वप्नस्य[11] अह रात्रौ[11] दृष्टस्य प्रातरदृश्यमानार्थस्य आश्रितान् अरक्षत[12] कदर्यस्य चाऽभुञ्जानस्य धनवत च निर्विद। तौ उभौ अपि क्षिप्रम् नश्यत इति निर्वेद ॥ १२ ॥

मुद्गल० अध इदानीं प्रभातसमये स्वप्नस्य स्वप्न प्रति निर्विदे निर्विण्णोऽस्मि। तथा अभुञ्जत परान् अरक्षत रेवत धनवत पुरुषस्य। एवभूत पुरुष प्रत्यपि निर्विण्णोऽस्मि। यत ता उभा तावुभौ बस्रि क्षिप्र नश्यतो नाश प्राप्नुत। स्वप्नदृष्ट पदार्थ प्रातर्नोपलभ्यते, कदर्यस्येव धनम् अभुक्तम् अदत्त सत् क्षिप्रमेव नश्यति। तदुभयविषयो निर्वेदो मा बाधत इत्यर्थ। च पूरण ॥ १२ ॥

इति प्रथमाष्टके अष्टमाध्याय त्रयोविंशो वर्ग ॥

इति प्रथमे मण्डले सप्तदशोऽनुवाक ॥

---

१ गुप्तयो कु २ नास्ति भ ३ कारणात् कु ४ निस्सत्ता मूको ५ °त सत भ ६ भ स्वप्न क. मूको ७-७ नास्ति भ ८ कक्षीन् वि[1] अ[2] ९ निन्दत्यर्थं वि[1] अ[1] १० अथ दु, नास्ति वि[1] अ[2] ११-११ अहो रात्रे वि[1] अ[1] १२ अरक्षितः वि[1] अ[1]

## [१२१]

कदित्था नॄँः पात्रं देवयतां श्रवद् गिरो अङ्गिरसां तुरण्यन् ।
प्र यदानड् विश आ हर्म्यस्योरु क्रंसते अध्वरे यजत्रः ॥ १ ॥

कत् । इत्था । नॄन् । पात्रम् । देवऽयताम् । श्रवत् । गिरः । अङ्गिरसाम् । तुरण्यन् ।
प्र । यत् । आनट् । विशः । आ । हर्म्यस्य । उरु । क्रंसते । अध्वरे । यजत्रः ॥ १ ॥

स्कन्द० 'ऐन्द्रं च'। ऐन्द्रमेतत्सूक्तम्। 'ऐन्द्रं यदुच्यते सूक्तं तत्र कदित्थेत्येतत् पञ्चमीशिजस्य। वैश्वदेवमप्येतत् समाम्नातम् प्रतिनाभानेदिष्ठं ब्राह्मणोक्तम्' ॥ तत्रेत्ययम् 'ऐन्द्रं च वैश्वदेवं च तस्ये दानसंस्तवः' इत्येतेषां परस्तादुक्तानां प्रतिनिर्देशः। तेषां मध्ये यदैन्द्रं सूक्तमुच्यते कदित्थेत्येतत् पञ्चमीशिजस्य कक्षीवतः। एतद् वैश्वदेवमपि। एवं हि शाङ्खायनानां ब्राह्मणे समाम्नातम् "तद्यानि तत्र वैश्वदेवानि भवन्ति' तान्युद्धरिष्यामि प्राजापत्यान्यनिरुक्तानि' परोक्षवैश्वदेवान्यधीयन्ते 'प्र वः पान्तं रघुमन्यवोऽन्धः" (ऋ १,१२२,१), 'तं प्रत्नथा पूर्वथा विश्वथेमथा" (ऋ ५,४४,१), कदित्था नॄँ पात्रं देवयताम्" इति प्रतिनाभानेदिष्ठम्" (शांब्रा २४,१) इति। अत्र ब्राह्मणे परोक्षवैश्वदेवं प्रतिनाभानेदिष्ठं चेत्युक्तम्। प्रतिनाभानेदिष्ठमिति च नाभानेदिष्ठस्य प्रतिनिधिरुच्यते। नाभानेदिष्ठं वैश्वदेवम्। तस्य प्रतिनिधित्वादिदमपि वैश्वदेवम्। परोक्षवैश्वदेवं तु इन्द्रादन्यासां 'स्तम्भीद्ध द्याम्' (ऋ १,१२१,२) इत्यादीनां देवतानां विशेषणत्वेन कीर्त्यमानत्वात्। कत्-शब्दोऽत्र 'कद् नूनम्' (ऋ १,३८,१) इतिवत् कदेत्यस्यार्थे। कदा इत्था सत्यम्। नॄन्' षष्ठ्यर्थेऽत्र च' द्वितीया। मनुष्याणामस्माकं स्वभूतम्। पात्रम् मदीयमसादि" देवयताम् देवकामानाम् अङ्गिरसाम् पितृशब्दस्यार्थे' सोऽयमित्यभिसम्बन्धात्तस्ये प्रयोगः। अङ्गिरसोऽपत्य-भूतानाम्। तुरण्यन् त्वरमाण इन्द्रः'। पिबेदिति वाक्यशेषः। अथवा शृणुयात् गिरः स्तुतिलक्षणा वाचः। 'प्र आनट्' इत्ययमुपसर्गौ धात्वर्थार्थे। व्याप्नोति विशः मनुष्यान् यष्टॄन्। आकारस्तु पदपूरणो मर्यादायां वा। मर्यादया व्याप्नोति। विश' हर्म्यस्य इत्येतदिदं रूपम्। हर्तुः शत्रुधनानामिन्द्रस्य। उरु बहु। क्रंसते करोतेरयम् लेटि"। तुमागमश्छान्दसत्वात्। क्रमेर्वा करोत्यर्थे। करोति। अध्वरे यज्ञे। यजत्रः यष्टा मनुष्यः। अथवा' 'हर्म्यम्' (निघ ३,४) इति गृहनाम। सप्तम्यर्थेऽत्र षष्ठी। अध्वरे इत्येतेन चास्य सम्बन्धः। क्रंसते इति क्रमिः स्वार्थे एव। यस्य गृहे योऽध्वरः, तस्मिन् बहु क्रामतीन्द्रः। पुनःपुनः गच्छतीत्यर्थः। यजत्रः यष्टव्यः ॥ १ ॥

वेङ्कट० देवान् इच्छताम् अङ्गिरसाम् अस्माकम् इत्थं प्रवृद्धाः" स्तुतीः" इन्द्रः कदा शृणोति आधिपत्यान् वा क्षान् नॄन् क्षिप्रकारी। यदा कामानाम्" आहरणशीलस्येन्द्रस्य यजमानः विशः ऋत्विजः प्रकर्षेण व्याप्नोति, ततोऽसाविन्द्रस्तस्य यज्ञे" गन्तुं विस्तीर्णम् अवकाशं क्रमते यज्ञेषु यष्टव्यः ॥ १ ॥

---

१. नास्ति मूको. २. प्रतिरुक्तानि प्राजापत्यानि मूको. ३. "पा" मूको. ४-५. नास्ति मूको. ५. "नेदिष्ठम् म. ६. नास्ति म. ७. गृह" मूको. ८. प्रतिष्ठ" म. ९. वि म. १०. लेटि कु. ११. प्रवृद्धाः वि' अ'. १२. स्तुतिः वि' अपं. १३. कस्मात् वि' अ'. १४. यज्ञेषु वि' अ'.

उत्पन्नाम् गाम् रात्रिम् अनु चक्षत अनु पश्चात् पश्यति प्रकाशते। स्वयं प्रौढप्रकाशोऽपि स्वगतया निष्पादितया रात्रेस्तमसश्च पश्चाद् उदेतीत्यर्थः। अपि चेदमपरम् आश्चर्यं[1] यदयम् अश्वस्य मेनाम् स्त्रीनामैतत् ( तु. या ३,२१ )। तदिस्त्रयं वडवाम् गोः मातरम् जननीम् परिवेंपरीत्यं, विपरीतमकरोत्। कदाचिद् इन्द्रो लीलया वडवायां गाम् उत्पादयामास। तदत्र प्रतिपाद्यते ॥ २ ॥

नक्ष॒द्धव॑मरु॒णीः पू॒र्व्यं राट् तु॒रो वि॒शामङ्गि॑रसा॒मनु॒ द्यून् ।
तक्ष॒द् वज्रं॒ निर्यु॑तं त॒स्तम्भ॒द् द्यां चतु॑ष्पदे॒ नर्या॑य द्वि॒पादे॑ ॥ ३ ॥

नक्ष॑त् । हव॑म् । अ॒रु॒णीः । पू॒र्व्य॑म् । राट् । तु॒रः । वि॒शाम् । अङ्गि॑रसाम् । अनु॑ । द्यून् ।
तक्ष॑त् । वज्र॑म् । निऽयु॑तम् । त॒स्तम्भ॑त् । द्याम् । चतुः॑ऽपदे । नर्या॑य । द्विऽपा॑दे ॥ ३ ॥

स्कन्द० नक्षत्[1] णक्ष स्तृक्ष नक्ष गतौ। गच्छतीन्द्रः। हवम् आह्वानं प्रति। कदा। उच्यते। यदा अरुणीः अरुणवर्णीरुषाः। पूर्व्यम् पूर्वं प्रथमम्। राट् आख्यातमेतत्। छान्दसत्वात्तु निपाताभावः। 'राजते दीप्यते'[1]। उषसि उदितमात्रायामित्यर्थः। तुरः त्वरिता तूर्विता वा शत्रूणाम्। कस्य हवम्। उच्यते। विशाम् मनुष्याणाम् अङ्गिरसामृषीणां तदपत्यभूतानां वा अस्माकम्। 'अनु द्यून् अनुशब्दोऽत्र[2] 'लक्षणेत्थंभूताख्यानभागवीप्सासु'[3] ( पा १,४,९० ) इत्येवं वीप्सायां कर्मप्रवचनीयः। 'द्युः' ( निघ १,९ ) इत्यह्नो नामधेयम्। अहन्यहनीत्यर्थः। किञ्च तक्षत् तक्षतिः करोतिकर्मा ( तु. या ४,१९ )। शुद्धोऽपि सोपसर्गो द्रष्टव्यः। संस्करोति वज्रम्। कीदृशम्। उच्यते। नियुतम् निशब्दोऽत्र प्रकर्षे, निशुक्लं निशुक्लमिति यथा। प्रकर्षेण शत्रुभिः सहात्मनो मिश्रयितारम्। शत्रुशरीरेषु प्रवेष्टारमित्यर्थः। तस्तम्भत् तुल्यस्तेऽपि 'संहितायाः लक्षणस्यानेन लक्ष्येण'[4] समुच्चारणादिदमपि[5] पदकारेण तस्तम्भदिति छेदत्वं परिगृहीतं न लिङन्तं तस्तभ्नेति। अयमर्थः स्तभ्नाति[6] तैस्तैरुपायैः द्याम् दिवम्। कस्यार्थाय सर्वमेतत् करोति। उच्यते। चतुष्पदे[1] नर्याय द्विपादे चेत्यु भवत्यर्थः। मनुष्येषु[1] भवं यत्र चतुष्पात् यत्र द्विपात् तस्य सर्वस्यार्थाय ॥ ३ ॥

वेङ्कट० उषसः राजयन्[7] शुक्लम् स्तोत्रं व्याप्नोति क्षिप्रः अङ्गिरसाम् विशाम्[8] स्वभूतम् दिवसेषु। करोति च वज्रम् नियतं पृथग् भावयितारम्। तथा मनुष्यहिताय गवादिकाय द्याम् उपरि अस्तम्भात् द्विपदे च यथासुखम् स्थातुम् ॥ ३ ॥

मुद्गल० अरुणीः अरुणवर्णा उषसः राट् राजयन् प्रकाशयन् सूर्यात्मा इन्द्रः पूर्व्यम् पूर्वैरङ्गिरोभिः प्रयुक्तम् हवम् इदानीम् अस्माभिः क्रियमाणमाह्वानम् नक्षत् नक्षतु व्याप्नोतु। कीदृशः। अनु द्यून् अनुदिवसम् विशाम् मनुष्याणाम् अङ्गिरसाम् ऋषीणां स्तोतॄणाम् तुरः धनस्य प्रेरयिता। अपि च। स इन्द्रः वज्रम् स्वकीयम् आयुधम् नियुतम् नियतं युक्तम् तक्षत् अकरोत्। तथा द्याम् द्युलोकम् तस्तम्भत् अस्तम्भयत्। यथा अधो न पतति तथाऽकरोदित्यर्थः। किमर्थम्। नर्याय नृभ्यो हिताय चतुष्पदे गवाश्वादये द्विपादे मनुष्याय च। एतदुभयार्थमित्यर्थः ॥ ३ ॥

---

१. आमय मूको. २. नास्ति कु. ३-३. नास्ति भ. ४-४. संहितापाठेन भ. ५. तस्तुम्° कु. ६. स्तभ्नोति भ. ७. राजा सद् वि°; राजन् वि[1] अ[1]. ८. नास्ति वि[1] अ[1].

अस्य मदे स्वर्यं दा ऋतायापीवृतमुस्रियाणामनीकम् ।
यद्ध प्रसर्गे त्रिककुम्निवर्तदप द्रुहो मानुषस्य दुरो वः ॥ ४ ॥

अस्य । मदे । स्वर्यम् । दाः । ऋताय । अपिऽवृतम् । उस्रियाणाम् । अनीकम् ।
यत् । ह । प्रऽसर्गे । त्रिऽककुप् । निऽवर्तत् । अप । द्रुहः । मानुषस्य । दुरः । वरिति वः ॥४॥

स्कन्द० अस्येत्यय मदसम्बन्धात् सोमस्य प्रतिनिर्देशः । अस्य सोमस्य मदे "यस्य च भावेन"[1] (पा २,३,३७) इत्यनेनेयं सप्तमी । तत्सम्बन्धेन लक्षणभूतक्रियाध्याहारः । मदे प्राप्ते । एतेन सोमेन मत्तस्सन्नित्यर्थः । स्वर्यम् स्तृ शब्दोपतापयोः । शब्दकारि । दाः व्यत्ययेनात्र मध्यमः पदे दत्तवानिन्द्र । ऋताय यज्ञार्थम् । अपीवृतम् छादितम् । स्वगोष्ठे द्वारं निरुध्य स्थापितमित्यर्थः[2] । उस्रियाणाम् गवाम् अनीकम् समूहम् । कदा । यत् यदा । ह शब्दस्तु पदपूरणः । प्रसर्गे प्रसृज्यते यस्मिन् स प्रसर्गो दानकालः, तस्मिन् । त्रिककुप् त्रीणि अभिजनः शौर्यं यशश्च ककुभः सत्त्वानि समुच्छ्रितानि यस्य स त्रिककुप् । निवर्तत् यज्ञं प्रति निवर्तते । दानाय यष्टुरभिमुखो भवतीत्यर्थः । किञ्च द्रुह द्रोग्धुर्मेघस्य[3] । कस्य द्रोग्धुः । उच्यते । मानुषस्य मनुष्यजातस्य सर्वस्य । मेघो ह्युदकं निरुन्धन् सर्वं मनुष्यजातं द्रोग्धि । तस्य दुरः द्वाराणि उदकनिर्गमनद्वाराणि अप व अपावृणोति ॥ ४ ॥

वेङ्कट० अस्य सोमस्य मदे स्वरणकुशलं[4] प्रादास्त्वं हि गावः स्वर्यशने स्वर्यम्[5] दा परिवृतम्[6] गवाम् अनीकम् । यदि हि मानुषस्य उद्योगे[7] युद्धप्रारम्भे त्रिषु अभिजनविद्याशौर्येषु त्रिषु वा लोकेषु उच्छ्रित[8] इन्द्रो निवर्तते तदास्मै द्रोग्धॄणि द्वाराणि अपवृणोति[9] ॥ ४ ॥

मुद्गल० हे इन्द्र । अस्य सोमस्य पानेन मदे हर्षे सति ऋताय यज्ञार्थम् स्वर्यम् स्तुत्यम् अपीवृतम् पणिभिर्गुहासु निगूढम् उस्रियाणाम् गवाम् अनीकम् समूहम् दाः अङ्गिरोभ्यो दत्तवानसि । उत्तरोऽर्धर्चः परोक्षकृतः । यत् ह यदा खलु प्रसर्गे युद्धे त्रिककुप् त्रिषु लोकेषू-च्छ्रितः इन्द्रः निवर्तत् निवर्तते । तदानीं स इन्द्रः द्रुहः द्रोग्धुः मानुषस्य मनोः सम्बन्धिनोऽसुरस्य पणेः सम्बन्धीनि दुरः द्वाराणि गवामभिनिर्गमनाय पिहितानि अप व अपवृणोति उद्घाटयति ॥ ४ ॥

तुभ्यं पयो यत् पितरावनीतां राधः सुरेतस्तुरणे भुरण्यू ।
शुचि यत् ते रेक्ण आयजन्त सबर्दुघायाः पय उस्रियायाः ॥ ५ ॥

तुभ्यम् । पयः । यत् । पितरौ । अनीताम् । राधः । सुऽरेतः । तुरणे । भुरण्यू इति ।
शुचि । यत् । ते । रेक्णः । आ । अयजन्त । सबःऽदुघायाः । पयः । उस्रियायाः ॥५॥

---

१-१. नास्ति भ. २. स्थापित° कु. ३. द्रोग्धु भ. ४. स्वरण° क वि°; स्वरण° ■ दोभ. ५-५. दासपरिवृतम् वि° अ°. ६. उद्योगे कु. ७. त्रिषु. वि° अ°. ८. अपवृणोति वि°° अ°.

स्कन्द० तुभ्यम् इति तादर्थ्ये चतुर्थी। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः। तवार्थाय तत् पयः उदकम्। त्वं वर्षसीत्येवमर्थं तदुदकमित्यर्थः। यत् कतमत्। उच्यते। यत् पितरौ सर्वस्य पितृभूते द्यावापृथिव्यौ अनीताम् आदित्यं[1] प्रति नीतवत्यौ। यत्र द्यावापृथिवीभ्यामाहृत्य रश्मयो नीतवन्तः तद्धेतुत्वप्रतिपत्त्या द्यावापृथिव्यावेव नीतवत्यावित्युच्यते। राधः धनभूतं सर्वस्य। सुरेतः शोभनमुदकम्। पय इत्यनेन चोदकत्वमुक्तम्[2]। सुरेत इत्यनेन तु तस्य शोभनत्वमुच्यत इति नास्ति पौनरुक्त्यम्। किंरूपाय तुभ्यम्[3]। उच्यते। तुरणे त्वरणाय नुत्त्यै वा शत्रूणाम्। किंरूपे द्यावापृथिव्यौ। भुरण्यू क्षिप्रे[4]। न च केवलमुदकम्। किं तर्हि। शुचि शुद्धम् यत् ते[5] रेक्णः[6] धनभूतम्। आ अयजन्त आभिमुख्येन दत्तवन्तः। कृतवन्त इत्यर्थः। के। सामर्थ्यात् प्रजापतिप्रभृतयः सर्वे देवाः। सबर्दुघायाः सबः[7] अमृतमुच्यते। अमृतमयं दोग्ध्र्याः पयः क्षीरम् उस्रियायाः गोः। तदपि तुभ्यं तव पानार्थमित्यर्थः। अथवैवमन्यथा अस्या ऋचोऽर्थयोजना। "तुभ्यं पय इत्यत्र" दृश्युच्यते। पितरावपि स्वेपामपत्यानां पितृत्वात् पालयितृत्वाद्वा दंपती यजमानौ। अनीतामित्यपि कदर्थे लङ्। दर्शपूर्णमासयोर्वेदधि यजमानी वेदिं[8] प्रति नयतः तवार्थाय। यच्च धनं पुरोडाशाख्यम्। सुरेतः शोभनं प्रणीताख्यस्य संस्कारकमुदकं यस्य तत् सुरेतः। यच्च ते तुभ्यमायजन्त मर्यादया ददति ऋत्विजः पयः "उस्रियायाः सबर्दुघं" तदपि तवैवार्थाय। शिष्टपदयोजना सदृशी ॥ ५ ॥

वेङ्कट० त्वदर्थम् 'आसनीये सारं' यदा द्यावापृथिवी नयतः 'शोभनवर्षादिरेतस्कं' धनं क्षिप्रकारिणे तुभ्यम् भरणशीले। यदा च तद् गोषु पयोरूपेण परिणतं यजमाना "अमृतदुघायाः उस्रियायाः[1]" गोः पयोलक्षणम् शुचि धनं तदा आ अयजन्त[11] प्रायच्छन् अस्य सांनाय्यस्य मदं इति[12] ॥ ५ ॥

मुद्गल० हे इन्द्र! तुरणे क्षिप्रकारिणे तुभ्यम् भुरण्यू कृत्स्नं जगत् पोषयन्त्यौ पितरौ उत्पादयन्त्यौ द्यावापृथिव्यौ यत् यदा पयः सांनाय्यलक्षणं हविः अनीताम् गोभ्यनयताम्। स्थापितवन्तावित्यर्थः। हविषः कारणाद्धि जगदुत्पद्यते। यत् यदा द्यावापृथिवीभ्यां गोभ्यानीतम् शुचि शुद्धम् सबर्दुघायाः क्षीरस्य दोग्ध्र्याः उस्रियायाः गोः पयः। कीदृशं पयः। राधः गोधनम् सुरेतः सुष्ठु रेतसा उदकेन गोरूपात्तमुत्पन्नम् रेक्णः धनवदतिप्रियम्। एवंविधं हविः ते तुभ्यम् आ अजयन्त आभिमुख्येन यजमानाः प्रायच्छन्। तदानीं "तुहो मातुपस्य दुरो द्वाराणि" अपावृणोतीति पूर्वया सम्बन्धः ॥ ५ ॥

इति प्रथमाष्टके सप्तमाध्याये चतुर्विंशो वर्गः ॥

अध प्र जज्ञे तरणिर्ममत्तु प्र रोच्यस्या उषसो न सूरः ।
इन्दुर्येभिराष्ट स्वेदुहव्यैः स्रुवेण सिञ्चञ्जरणाभि धाम ॥ ६ ॥

अध । प्र । जज्ञे । तरणिः । ममत्तु । प्र । रोचि । अस्याः । उषसः । न । सूरः ।
इन्दुः । येभिः । आष्ट । स्वेदुऽहव्यैः । स्रुवेण । सिञ्चन् । जरणा । अभि । धाम ॥ ६ ॥

---

१. वर्षती° मूको. २. दित्यं कु. ३. °दकत्व° म. ४. भ्रातम् म. ५. नास्ति म. ६. ''' न म. ७-७. नास्ति म. ८-८. आसनीयसारं वि° भ°. ९-९. °वर्षादि° कु; °वर्षादिशोभनरेतस्कम् वि° भ°. १०-१०. °त दुघायाउस्रियायाः वि° भ° ११-११ नास्ति वि° भ°. †प्रायच्छन्त वि°; आयजन्त छन्दः १२. नास्ति कु. १३-१३ दुरो मातुपस्य द्वा° मूको.

स्कन्द० अध-शब्दोऽत्र पदपूरणः । एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यो वृत्रवधादिषु [1]प्र जज्ञे तरणिः यशसा[1] शौर्येण च परिवृद्धोऽभूत् । यश्च प्रकर्षेण भ्राजत् । अथवा तच्छब्द-मध्याहृत्य स्वार्थ एवायं योज्यो लोट् प्रत्ययः । ममत्तु तृप्यत्विति[2] । यश्च प्र रोचि प्रकर्षेण दीप्यते । [3]अस्याः उषसः न सूरः[3] नशब्दोऽत्र पुरस्तादुपचारोऽप्युपमास्थानीयः । यथाममस्याः उषसः सम्बन्धी सूर्यः, तद्वत् । सूर्यस्योषसः पुत्रत्वेन सम्बन्धः 'रुशद्वत्सा रुशती' ( ऋ १, ११३, २ ) इत्यत्रोक्तः[3] । न च [4]केवल एवंविध एव[4] । किं तर्हि । इन्दुः सोमः । येभिः यैः आष्ट व्याप्तिकर्मायम् ( नि. निघ २,१८. ) । देवैः सह प्राशः[5] । स्वेदुहव्यैः स्वेन्दुहव्यैः । नकारलोपश्छान्दसः । स्वा इन्दुहव्या येषां ते स्वेन्दुहव्याः । स्वैः सोमैः देवानां यष्टारः । के पुनस्ते । इमस्य सखायोऽङ्गिरसः । तैः स्वेन्दुहव्यैः । स्रुवेण स्रुचसदृशेन ग्रहचमसादिना पात्रेण । क्षियन् व्यत्ययेनायं कर्मणि शतृप्रत्ययः । सिच्यमानः । अभि धाम स्थानं तेजो वा आहवनीयाख्यं प्रति । आहवनीये हूयमानः[6] इत्यर्थः । न च केवलः[7] इन्दुः । किं तर्हि । जरणा स्तुतिश्च । यो यैर्देवैस्सह [8]सोमं पिबति[8] स्तूयते चेत्यर्थः । यच्छब्दश्रुतेः साकाङ्क्षत्वाच्च तैः स्वसखैरङ्गिरोभिः[9] सह तृप्यत्विति वाक्यशेषः ॥ ६ ॥

वेङ्कट० अथ प्रादुरभूत् सः तरणिः । अस्मान्[9] ममत्तु । सः[10] अस्याः उषसः सूर्यः इव तेजसा[11] प्रकर्षेण दीप्यते सोमः । यैः पीतः स्वभूतसमिद्धहव्यैः[12] सखिभिः यजमानैः ग्रहचमसादिना[13] स्रुवेण[14] साधनेन स्तुत्या सह आहवनीयाख्ये स्थाने[15] सिच्यमानः तान् ममत्विति[16] ॥ ६ ॥

मुद्गल० अथ इदानीम् अयम् इन्द्रः स्तुतिभिः प्रीयमाणः सन् प्र जज्ञे प्रकर्षेण प्रादुर्भूय । सः तरणिः शत्रुभ्यस्तारकोऽस्मान् ममत्तु मादयतु । स च प्र रोचि प्रकृष्टं रोचते । इष्टान्तः । अस्याः अस्माभिर्दृश्यमानायाः उषसः समीपे वर्तमानः सूरः न सूर्य इव जरणा जरणीयः स्तोतव्यः इन्दुः सोमः धाम आहवनीयलक्षणं स्थानमभिलक्ष्य स्रुवेण क्षियन् सिच्यमानः सन् स्वेदुहव्यैः स्वभूतसमृद्धहविष्कैः[17] येभिः यैरस्माभिः आष्ट आप्तिः आसीत् । तान् अस्मान् मादयत्वित्यर्थः ॥ ६ ॥

स्विध्मा यद् वनधितिरपस्यात् सूरो अध्वरे परि रोधना गोः ।
यद्ध प्रभासि कृत्व्याँ अनु द्यूननर्विशे पश्विषे तुराय ॥ ७ ॥

सुऽइध्मा । यत् । वनऽधितिः । अपस्यात् । सूरः । अध्वरे । परि । रोधना । गोः ।
यत् । ह । प्रऽभासि । कृत्व्यान् । अनु । द्यून् । अनर्विशे । पशुऽइषे । तुराय ॥ ७ ॥

स्कन्द० [18]स्विध्मा यत्[18] यदा सुष्ठु इद्धा दीप्ता । सुनिशितेत्यर्थः । वनधितिः वनशब्दोऽत्र 'नहि मे अस्त्यघ्न्या' ( ऋ ८,१०२,१९ ) इति दर्शनात् तीक्ष्णवचनः । धितिशब्दः स्वधितिपर्यायः । तीक्ष्णस्वधितिः ।

१-१. नास्ति भ. २. तृप्यति° कु. ३. °रुम् मूको. ४-४. °र्प्यंविधमेव मूको. ५. प्राशन् मूको. ६. °मानश् भ. ७. °वलम् भ. ८. सर्वे° भ. ९. अस्मात् भ° कु. १०. सः अस्य वि° अ° कु. ११. तेजसा वि° अ°. १२. स्वभूतः प्रमिद्ध° अ° कु; °हव्यैः वि° अ°. १३. दिना वि° अ°. १४. नास्ति वि° अ°. १५. °ने तान् वि° अ°. १६. ममत्तु कु. १७. °विष्कैः मूको. १८-१८. नास्ति मूको.

अपस्यात् अपः कर्म विशसनात्मकम्, तत् कर्तुमिच्छति । पशुं विशसतीत्यर्थः । सूरः षष्ठ्यर्थे प्रथमा । सूर्यस्य सम्बन्धिनि अध्वरे यज्ञे । उदिते ह्यादित्ये यज्ञः क्रियत इत्ययं सूर्यस्य यज्ञेन सम्बन्धः । परि रोधना सर्वतो निरोद्धी । मारयित्रीत्यर्थः । गोः गोग्रहणमत्रोपलक्षणार्थम्[1] । गवादेः पशोः । यत् इ इत्यव्दश्चार्थे । यदा ■ प्रभासि भा दीप्तावन्यत्रेह तु गत्यर्थः । यज्ञं प्रति गच्छसि । 'कृत्वी' ( निघ २,१ ) इति कर्मनाम । कृत्व्यान् यागकर्माहान् प्रति । सून् दिवसान् । यागदिवसानित्यर्थः । कस्यार्थाय । उच्यते । अनर्विशे पड्विशे तुराय नर गतौ । अगता विशो यस्य सोऽनर्विट्[2] । कोऽसौ । यस्य मित्रादयो वा मनुष्या यज्ञेत्वारक्के 'न गता.[3] परिचारका या सर्वे । पशून् य इच्छति स पड्विट् । देवान् परिचरितुं यस्त्वरते स तुरः । सर्वत्र च तादर्थ्ये चतुर्थी । अगतमनुष्यस्य[4] पशुकामस्य त्वरमाणस्य[5] ■ यजमानस्यार्थाय । यज्ञमस्याविघ्नेन समापयितुमित्यर्थः । यदेति श्रुतेस्तदेत्यध्याहृत्य परयैकवाक्यता ॥ ७ ॥

वेङ्कट० यथा पशुविशसनाय तीक्ष्णां स्वधितिम् अपश्यन् 'यज्ञे नो पशुं' 'बध्नाति एवम् अनुदिते स्वधि म[6] प्रवर्तते[7] इति समुदायार्थः । सुष्ठु तीक्ष्णा यदि तीक्ष्णधारा स्वधितिः पशुविशसनार्थं कर्म कर्तुम् इच्छति । अथ प्राङ्, अध्वर्युः यज्ञे गोः परि रोधनार्थं[8] भवति यदि कर्मयोग्येषु दिवसेषु त्वं प्रभासि अनसा यः कार्येषु विशति यो वा पशुम् इच्छति क्षिप्रकारी तयोः कार्यकरणाय भासि चेत् यज्ञे पशुं बध्नाति इति[9] ॥ ७ ॥

मुद्गल० यत् यदि तिग्मा सुतीक्ष्णा स्वधितिः वने छेत्तव्ये वृक्षसमूहे निधातव्या शस्त्री अपस्यात् अपः विशसनात्मकं स्वकीयं कर्म कर्तुम् इच्छेत्, तदानीम् सूरः प्रेरकोऽध्वर्युः अध्वर यज्ञे गोः पशोः रोधना रोधनाय यूपे नियोजनाय परि भवति समर्थो भवति । उत्तरोऽर्धर्चः प्रत्यक्षकृतः । हे इन्द्र ! सूर्यात्मना वर्तमानस्त्वम् कृत्व्यान् 'कृत्वी' ( निघ २, १ ) इति कर्मनाम । कर्मसु साधून् द्यून् दिवसान् अनुलक्ष्य यत् ह यदा खलु प्रभासि प्रकर्षेण दीप्यसे । तदानीम् अनर्विशे अनसा शकटेन इन्धनाद्याहरणाय अरण्यं प्रविशते तथा गन्तव्यं स्थलं प्रति गन्तुमशक्याय पुरुषाय पड्विशे पशून् प्रेरयते तुराय त्वरमाणाय गोपालकाय च सिध्येदभिमतमिति वाक्यशेषः ॥ ७ ॥

अष्टा मुहो दिव आदो हरी इह द्युम्नासाहमभि योधान उत्सम् ।
हरिं यत् ते मन्दिनं दुक्षन् वृधे गोरभसमद्रिभिर्वाताप्यम् ॥ ८ ॥

अष्टा । मुहः । दिवः । आदः । हरी इति । इह । द्युम्नऽसहम् । अभि । योधानः । उत्सम् ।
हरिम् । यत् । ते । मन्दिनम् । दुक्षन् । वृधे । गोऽरभसम् । अद्रिऽभिः । वाताप्यम् ॥ ८ ॥

स्कन्द० अष्टा व्याप्ता । महः महतः दिवः द्युलोकस्य । आदः अभक्षयः । हरी इत्येतद् अभि योधान इत्येतेन सम्बन्धयितव्यम्[11] । भक्षय । किम् । उच्यते । इह अभक्षयः । द्युम्नासाहम् द्युम्नमन्नं मांसमण्डादि, तद्यत् स्वादुत्वेनाभिभवत्, यः सत्सर्वमेनाभिभवति स द्युम्नासाहः, तम् ।

---

१. °'अग्रहणमुपल' अ. २. °निंद् कु. ३-३. नास्ति अ. ४. °रस च अ. ५. त्वरण य मूको. ६-६. यज्ञपशु वि[1] अ[2]. † नास्ति कु. ७-७. नास्ति वि[1] अ[2]. ८. अर्थेत वि[1] अ[1]. ९. 'भक्षय कु. १०. नास्ति कु. ११. सम्बन्धयि° क.

हरी अभि योधानः हरी इति तृतीयार्थे प्रथमा । हरिभ्यामभियोधन्[1] [2]उत्सम् मेघम्[2] । वर्षन्नित्यर्थः । कतमं सोमम् । उच्यते । हरिम् हरितवर्णम् यत् यम् ते तवार्थाय । मन्दिनम् स्तुतिमन्तं मोदयितारं वा । दुक्षन् दुग्धवन्तः ऋत्विजः । क्षारितवन्त इत्यर्थः । [3]वृधे वर्धनाय इन्द्रस्य[3] तवात्मनो वा । गोरभसम् गावः स्तुतयः आपो वा । 'रभसः' ( निघ ३,३ ) इति महन्नाम । तस्मात् 'तत् करोति'' ( पावा ३, १, २६ ) इति णिच् । ण्यन्तादच् । गावो रभसयित्र्यो[1] यस्य स गोरभसः । गोभिरद्भिर्वा [4]महान् कृत[4] इत्यर्थः । तं गोरभसम् । केन दुक्षन् । उच्यते । अद्रिभिः अभिषवग्रावभिः । वाताप्यम् उदकरूपम् । अथवा वातः प्राणः, तस्य प्याययितारम् । प्राणकरमित्यर्थः ॥ ८ ॥

वेङ्कट० अपवर्धनम् उदकम् हरितस्य मेघं योधमानः महतः दीप्तस्य सोमस्य पाता स त्वम् अश्वी[6] यजमाने पाययसि, यदा तव वर्धनाय[5] हरितवर्णं मदकरं प्राणवेगम् अभिषवग्रावभिः दुहन्ति पातव्यं सोमम् । 'वाताप्यम्' ( निघ ४,२ ) इति उदकनामेति[7] ॥ ८ ॥

मुद्गल० हे इन्द्र ! महः महतः दिवः मदकरस्य सोमस्य पाता पाताः हरी स्वकीयावश्वौ इह अस्मिन् कर्मणि आदः पीतशेषं सोमं पायय । तथा द्युम्नासाहम् द्युम्नस्यान्नवीर्यस्याभिभवितारम् उत्सम् उदकानयितारं मेघम् योधानः योधनशीलस्त्वम् अभि भव । यत् यदा ते तव वृधे वर्धनाय हरिम् मनोहरम् मन्दिनम् मदकरम् गोरभसम् अत्र गोशब्दः पयसि वर्तते । पयोबलं तद्वद्वेगवन्तम्[8] । वीर्यवन्तमित्यर्थः । वाताप्यम् वातेन प्राप्तव्यम् । वाततुल्येन शीघ्रकारिणा त्वया पातव्यमित्यर्थः । एवंविधं सोमम् अद्रिभिः ग्रावभिः दुक्षन् दुहन्ति ऋत्विजोऽभिषुण्वन्ति । तदानीम् भवेति पूर्वेण सम्बन्धः ॥ ८ ॥

त्वमा॑य॒सं प्रति॑ वर्तयो॒ गोर्दि॒वो अश्मा॑न॒मुप॑नीतमृ॒भ्वा ।
कुत्सा॑य॒ यत्र॑ पुरुहूत व॒न्वञ्छुष्ण॑मन॒न्तैः प॑रि॒यासि॑ व॒धैः ॥ ९ ॥

त्वम् । आ॒य॒सम् । प्रति॑ । व॒र्त॒यः॒ । गोः । दि॒वः । अश्मा॑नम् । उप॑ऽनीतम् । ऋ॒भ्वा ।
कुत्सा॑य । यत्र॑ । पु॒रु॒ऽहू॒त॒ । व॒न्वन् । शुष्ण॑म् । अ॒न॒न्तैः । प॒रि॒ऽयासि॑ । व॒धैः ॥ ९ ॥

स्कन्द० त्वम् आयसम् लोहमयं वज्रम् । प्रति वर्तयः गमितवानसि । वज्रेण प्रोक्षवानसीत्यर्थः[9] । कम्[10] । उच्यते । गोः सर्वगतायाः अपि दिवः । अश्मानम् व्यापकं शुष्णं नामासुरम् उपनीतम् प्रापितम् । किम् । सामर्थ्यादुदकमुषिम् । ऋभ्वा 'ऋभुः' ( निघ ३,१५ ) इति मेधाविनाम । मेधाविना । केन । सामर्थ्यात्त्वयैव । कस्मिन् काले । उच्यते । कुत्साय कुत्सस्य ऋषेरर्थाय । यत्र[2] यस्मिन् काले । हे पुरुहूत ! बहुभिराहूत ! वन्वन् याचमानः । यत् कुत्सस्याभिप्रेतं तत् प्रार्थयमान इत्यर्थः । शुष्णम् नाम असुरम् । अनन्तैः अत्यन्तबहुभिः । परियासि 'वियातः' ( निघ २, १९ ) इति वधकर्मसु पाठात् 'यया वज्रिवः परियास्यंहः' ( ऋ ६,३७,४ ) इति च दर्शनात् घातितव् वधार्थः हतवानसि । वधैः प्रहारैः ॥ ९ ॥

---

१. मरि[°] मूको. २-२. नास्ति भ. ३. रमयि[°] मूको. ४-४. महत् भ. महत्कृत कु. ५. अरुणेन कु ६. ...व द्रि[°] भ[°]. ७. [°]नाम कु. ८. तदेव[°] मै[°]. ९. [°]वानित्यर्थः भ. १०. नास्ति भ.

वेङ्कट० त्वम् अयसा निर्मितं प्रेरितवान् असि गन्तुः[1] शुष्णस्य वधार्थं स्वर्गात् शिलासदृशं भूमिष्ठाय[2] तुभ्यं त्वष्ट्रा प्रहितेन सुधन्वनः पुत्रेण [3]त्वष्टुः शिष्येण[3] ऋभ्वा उपनीतम्। यदा कुत्सप्रीत्यर्थं युद्धं भजन् तच्छत्रुं शुष्णासुरम् अपरिमितैः प्रहारैः परिहंसि ॥ ९ ॥

मुद्गल० हे इन्द्र! त्वम् गोः गन्तुः शुष्णस्यासुरस्य वधार्थम् आयसम् अयोमयं वज्रम् प्रति वर्तयः आभिमुख्येन व्यसृजः। कीदृशं वज्रम्। दिवः द्युलोकात् ऋभ्वा दीप्तेन त्वष्ट्रा उपनीतम् आनीतम् भरमाणम् शीघ्रं शत्रोर्व्यापकम्। यत्र यदा हे पुरुहूत! पुरुभिर्बहुभिः स्तोतृभिराहूतेन्द्र! कुत्साय एतत्संज्ञाय ऋषये शुष्णम् शोषकमसुरम् अनन्तैः निरवधिकैः वधैः हननसाधनैरायुधैः वन्वन् हिंसन् परियासि परितो गच्छसि। तदानीं तद्वधार्थं वज्रं प्रत्यावर्तयः इत्यर्थः ॥ ९ ॥

पु॒रा यत् सूर॒स्तम॑सो॒ अपी॑ते॒स्तम॑द्रिवः फ॒लिगं॑ हे॒तिम॑स्य ।
शुष्ण॑स्य चि॒त् परि॑हितं॒ यदोजो॑ दि॒वस्परि॒ सुग्र॑थितं॒ तदादः॑ ॥ १० ॥

पु॒रा । यत् । सूरः॑ । तम॑सः । अपि॑ऽइतेः । तम् । अ॒द्रि॒ऽवः॒ । फ॒लि॒ऽगम् । हे॒तिम् । अ॒स्य॒ ।
शुष्ण॑स्य । चि॒त् । परि॑ऽहितम् । यत् । ओजः॑ । दि॒वः । परि॑ । सुऽग्र॑थितम् । तत् । आ । अ॒द॒रि॒त्यदः॑ ॥

स्कन्द० अत्रेतिहासमाचक्षते—'वृत्रः किल सूर्यनिरोधनसमर्थं महत्तमस्ततान। तं इत्वेन्द्रः तमसोऽपनोदनार्थं सूर्यं दिव्यारोहयाञ्चकार' इति। तदेतत् सव्येनोक्तम् 'वृत्रं यदिन्द्र शवसावधीः' (ऋ १,५१,४) इति। 'तत्र तमस्तन्वतो' [4]वृत्रस्य फलिगोऽपि[5] सहायो बभूव। तमपीन्द्रो जघान' इति। तदेतदिहोच्यते। यत् इत्येतच्च तम् इत्येतेन सामानाधिकरण्यात् व्यत्ययेन नपुंसकता। पष्ठ्यन्दश्रुतेश्च वाक्येतिहासार्थसंयुक्तकपदाध्याहारः[6]। यत्तमस्तन्वतो वृत्रस्य सहायो बभूव तं पुरा प्राक्। सूरः षष्ठ्यर्थे प्रथमा। सूर्यस्य सम्बन्धिनः। सूर्यनिरोधसमर्थस्येत्यर्थः। तमसः अपीतेः अपीतेर्यपोऽपेत्यस्य स्थाने। अपगतेः। यावत् तत्कृतं सूर्यनिरोधसमर्थं तमो नापगच्छति तावदित्यर्थः। हे अद्रिवः! वज्रोऽप्यद्रिविकारत्वादावरणाद्वा[7] अद्रिरुच्यते, तद्वन्![8]। फलिगम् [9]नामासुरं प्रति। हेतिम् वज्रम्। अस्य भूते काले लोडयं द्रष्टव्यः। क्षिप्तवानसि। वज्रेण फलिगं[5] हतवानसीत्यर्थः। शुष्णस्य चित्[5] चिच्छन्दोऽत्र चार्थे। शुष्णनाम्नश्चासुरस्य परिहितम् सर्वतो निहितं यत् ओजः सेनालक्षणं बलम्। दिवः परि द्युलोकस्योपरि सुग्रथितम् सुबद्धयोग्येन सूचीमुखादिना व्यूहेन व्यवस्थापितम्। तत् आ अदः आदारितवान्। हतवानित्यर्थः। अथवैवमन्यथास्या ऋचोऽर्थयोजना। 'फलिगः' (निघ १,१०) इति मेघनाम। य उदकं निरुध्य स्थितः तं मेघं प्रति पुरा तत्कृतस्य सूर्यनिरोधसमर्थस्य तमसोऽपगतेः वज्रं क्षिप। शुष्णस्य च शोषयितुरादित्यस्य स्वभूतं रश्मिभिराहृत्य[10] सर्वतो निहितं यदोजः 'ओजः' (निघ १,१२) इत्युदकनाम। उदकं सुग्रथितम्। तदादारयः ॥ १० ॥

वेङ्कट० पुरा यदा अयं सूर्यः तमसः सद्भावात्[11] शुष्कः अभूत्, [12]तदानीं तम् अस्य[12] सूर्यस्य[13]

---

१-१. गन्तुं वि[1] अ[3]. २. भूमिस्थाय वि[1,3] अ[1] कु छपं. ३-३. त्वष्टृशिष्येण वि[1] अ[1]. ४. तमस्तन्वतो मूको. ५-५. नास्ति अ. ६. °युक्तपदा° मूको. ७. °द्रिवाचकत्वाद्वा° कु. ८. तद्वन् अ. ९. नास्ति अ. १०. °राहृत्य मूको. ११. सद्भावात् वि[1] अ[1] कु छपं. १२-१२. तदानीमनस्य कु; तदानीं तस्य वि[1] अ[3]. १३. सूरस्य वि[1] अ.

